# श्री आदिशङ्कर भगवत्पाद वैभवम्

जगद्गुरु श्रीजयेन्द्र सरस्वतीस्वामिपादैः प्रकाशितम्



कालयुक्त वैशाख शुद्धपञ्चमी । (१२-५-१९७८)

॥ श्रीः ॥

## श्री आदिशङ्कर भगवत्पादकीर्तिस्तम्भ मण्टपस्य वैदिक-महासम्प्रोक्षणोत्सवाघोषः

महनीयाः ! सज्जनाः !!

सुविदितमिदं समेषां भारतीयानां यज्जगतामीश्वराः परमेश्वराः लोकशंकराःशंकराः जागतिकानां आध्यात्मिकादितापत्रयोपशमनाय परशुरामक्षेत्रे केरलप्रदेशे कालट्यां शंकराचार्यरूपेणाविर्बभूवुरिति ।

जगद्गुरवः आद्यश्रीशंकराचार्याः अनादिभूतं सनातनं श्रुतिमूलं अद्वैतं तत्त्वमुपलक्ष्य, परिशील्य, विमृश्य,

'आकाशात् पतितं तोयं यथा गच्छति सागरम्
सर्वदेवनमस्कारः केशवं प्रतिगच्छति'

इतिवत् 'सर्वेषां वेदान्तानां परे ब्रह्मणि तात्पर्य'मिति सिद्धान्तमुपस्थाप्य 'एकमेवाद्वितीयं ब्रह्म' इति परमं तत्त्वं उपदिश्य लोकाननुजगृहुः ।

जगदवनैकलक्ष्याः आर्द्रान्तरङ्गाः, आचार्याः अपारसंसारसागर-तरङ्गततिहतिश्रान्तानां अज्ञानामपि परंपरया परब्रह्मपदप्राप्तिसोपानायितं षण्मतरूपं विग्रहाराधनमार्गं कृपया समुपदिदिशुः । अन्तर्मुखसमाराधन-

गरिष्ठं समयाचारप्रधानं शाक्तं तन्त्रं परिष्कृत्य देवतामन्दिरेषु यन्त्राणि प्रतिष्ठापयामासुः ।

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायकाः ॥

इति सप्तमोक्षपुरीषु अन्यतमायां काञ्च्यां सर्वज्ञपीठमधिरुह्य परंपरासिद्धं कामकोटिपीठमिदंप्रथमतयाऽलंकृत्य श्रीकाञ्ची कामकोटिपीठगुरुपरंपरा-प्रवर्तकाचार्यप्रथामवापुः । तदनु नैके कामकोटिपीठमलंकृतवन्तः आचार्य-वर्याः अद्वैतमतप्रवर्तकाः अद्वैतसंप्रदायपरंपरामरारक्षुः ।

जगद्गुरूणां श्रीकाञ्ची कामकोटिपीठाष्टषष्टितमाचार्याणां श्री चन्द्रशेखरेन्द्रसरस्वतीसंयमीन्द्राणां परिपूर्णानुग्रहेण आदिशङ्कर-भगवत्पादावतारपवित्रिते कालटीप्रदेशे आदिशङ्करभगवत्पादानां मूर्तिमान् कीर्तिस्तम्भमण्टपः श्रीजयेन्द्रसरस्वतीस्वामिपादानां दृढसंकल्पबलात् विजृम्भते ।

श्रीकाञ्चीकामकोटिपीठविष्ठितानां नवषष्टितमाचार्याणां जगद्-रूणां श्रीजयेन्द्रसरस्वतीस्वामिपादानां करकमलैः कालयुक्तवैशाख-शुद्धपञ्चम्यां १२-५-१९७८ तमे दिने अष्टोत्तरशतदण्डिसन्यसिजनैः शताधिकवेदशास्त्रनिष्णातैश्च सार्धं श्री आदिशङ्करभगवत्पादकीर्ति-स्तम्भमण्टपस्य वैदिकमहासंप्रोक्षणोत्सवाभोषः निर्वर्तयिष्यते ।

१९७० तमे वत्सरे विजययात्राप्रसंगात् कालटीग्रामं समागतानां श्रीचरणानां इयं आद्य श्रीशङ्करभगवत्पादकीर्तिस्तम्भनिर्माणरूपरेखा मनस्युदिताऽसीत्। अस्माकं बाह्यचक्षुषां दर्शनाय कल्याणाय च भक्तवत्सलाः आचार्याः तां मूर्तिमतीं चक्रुः।

१९७६ तमे वत्सरे श्रीशङ्करभगवत्पादजयन्ती दिवसे कीर्तिस्तम्भमण्टपमनिर्णाणारम्भःसमजनि। तदनु क्रमशो ववृधे कीर्तिस्तम्भमण्टपनिर्माणकार्यक्रमः। मण्टपस्य सविधे पञ्चायतनमन्दिरं विलसति। मण्टपमुखे गुरुपादुका प्रतिष्ठिता वर्तते। पञ्चशदुत्तरशतहस्तपरिमाणोन्नतः अशीतिहस्तपरिमाणविस्तीर्णः नवकक्ष्याभिरुज्वलोऽयं कीर्तिस्तम्भमण्टपः। प्रतिकक्ष्यायां विराजमानाः विनायकसुब्रह्मण्य-शिव-अम्बिका-विष्णु-सूर्यादिमूर्तयः षण्मतस्थापनाचार्यमाचार्यं स्मारयन्ति। आदिशङ्करभगवत्पादावतारचरित्रकथासूचकाः प्रविकृतयः भित्तिषु संस्थापिताः अस्मान् आवर्जयन्ति। मण्टपस्य प्रवेशकक्ष्यां परितः विशिष्टाः प्रतिमाः गीताचार्योपदेशं, भगवत्पादभाष्यरचनां, गुरुपरंपरां च प्रथयन्ति। कीर्तिस्तम्भगोपुरकलशः आद्य श्री शङ्कराचार्यान् केरलीयान् कथयति।

तदनन्तरकोष्ठभित्तिषु आचार्यशिष्यचतुष्टयं, दक्षिणामूर्तिः, दिग्विजययात्राप्रसंगसंदृष्टपुण्यक्षेत्रप्रतिकृतयश्च अस्मान् आकर्षयन्ति। विद्युद्दीपैरलंकृतोऽयं मण्टपः स्वयंप्रकाशं स्मारयति। मण्टपोऽयं

दैविकीं परिस्थिति पालयति । तत्र समेषां मानसिकी शान्तिरुदेति । आद्यश्री शङ्कराचार्यसमकालीनानुभवस्तत्रत्यानां सर्वेषामुत्पद्यते ।

कालटीग्रामप्रदेशद्वारि स्थितोऽयं सर्वेषां आचार्यदर्शनद्वारा आत्मतुष्टिलाभाय स्वागतं व्याहरति ।

अतः सादरं सविनयं चामन्त्रयामहे तत्रभवतः सन्यासि-जनान्, साधून् पण्डितान् पामरान् सामाजिकान् भारतीयांश्च आद्यश्री शङ्कराचार्य कीर्तिस्तम्भमण्टपं समागत्य श्रीकाञ्ची कामकोटि-पीठाधिपति जगद्गुरु श्रीजयेन्द्रसरस्वतीश्रीपादैः 'मे' मासस्य अष्टमदि-नात् षोडशदिनावधि प्रचाल्यमानेषु वेदशास्त्रविद्वत्संमेलनेषु तथा 'मे' मासस्य द्वादशे दिवसे प्रचाल्यमाने कीर्तिस्तम्भमण्टपवैदिकमहा-संप्रोक्षणाघोषे च भागभागिनो भूत्वा आत्मानं कृतार्थयन्तु इति संप्रार्थयामहे ॥

इत्थं

श्री आदिशङ्करकीर्तिस्तम्भोद्घाटनाघोष समितिः

# श्री आदिशंकरभगवत्पादबिरुदावलिः

स्वस्ति श्रीमदखिल भूमण्डलालङ्कार त्रयस्त्रिंशत्कोटिदेवतासेवित श्रीकामाक्षीदेवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथ साक्षात्कार परमाधिष्ठान सत्यव्रतनामाङ्कित काञ्चीदिव्यक्षेत्रे शारदामठसुस्थितानाम् , अतुलित सुधारसमाधुर्य कमलासन कामिनी धम्मिल्ल संफुल्ल मल्लिका मालिका निष्यन्दमकरन्दझरीसौवस्तिक वाङ्निगुम्भविजृम्भणानन्द तुन्दिलितमनीषिमण्डलानाम् , अनवरताद्वैत विद्याविनोदरसिकानाम् , निरंतरालंकृतीकृतशान्तिदान्तिभूम्नाम् , सकलभुवनचक्रप्रतिष्ठापक श्रीचक्रप्रतिष्ठाविख्यातयशोलंकृतानाम् , निखिलपाषण्डषण्डकण्टकोत्पाटनेन विशदीकृत वेदवेदान्तमार्ग षण्मतप्रतिष्ठापकाचार्याणाम् , श्रीमत्परमहंस परिव्राजकाचार्यवर्य जगद्गुरु श्रीमच्छंकरभगवत्पादाचार्याः ॥

## ॥ ब्रह्मानुचिन्तनम् ॥

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ॥ १ ॥
अहमेव परं ब्रह्म निश्चितं चित्त चिन्त्यताम् ।
चिद्रूपत्वादसङ्गत्वादबाध्यत्वात्प्रयत्नतः ॥ २ ॥
अहमेव परं ब्रह्म न चाहं ब्रह्मणः पृथक् ।
इत्येवं समुपासीत ब्राह्मणो ब्रह्मणि स्थितः ॥ ३ ॥
सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरन्तरम् ।
तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ॥ ४ ॥
अहं ब्रह्मास्मि यो वेद स सर्वं भवति त्विदम् ।
नाभूत्या ईशते देवास्तेषामात्मा भवेद्धि सः ॥ ५ ॥
अन्योऽसावहमन्योऽस्मीत्युपास्ते योऽन्यदेवताम् ।
न स वेद नरो ब्रह्म स देवानां यथा पशुः ॥ ६ ॥
अहमात्मा न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥ ७ ॥
आत्मानं सततं ब्रह्म संभाव्य विहरन्ति ये ।
न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः ॥ ८ ॥

आत्मानं सततं ब्रह्म संभाव्य विहरेत्सुखम् ।
क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम् ॥ ९ ॥
तन्महापातकं हन्ति तमः सूर्योदये यथा ।
अज्ञानाद्ब्रह्मणो जातमाकाशं बुद्बुदोपमम् ॥ १० ॥
आकाशाद्वायुरुत्पन्नो वायोस्तेजस्ततः पयः ।
अद्भ्यश्च पृथिवी जाता ततो व्रीहियवादिकम् ॥ ११ ॥
पृथिव्यप्सु पयो वह्नौ वह्निर्वायौ नभस्यसौ ।
नभोऽप्यव्याकृते तच्च शुद्धे शुद्धोऽस्म्यहं हरिः ॥ १२ ॥
अहं विष्णुरहं विष्णुरहं विष्णुरहं हरिः ।
कर्तृभोक्त्रादिकं सर्वं तदविद्योत्थमेव च ॥ १३ ॥
अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ।
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् ॥ १४ ॥
नित्योऽहं निर्विकल्पोऽहं निराकारोऽहमव्ययः ।
सच्चिदानन्दरूपोऽहं पञ्चकोशातिगोऽस्म्यहम् ॥ १५ ॥
अकर्ताहमभोक्ताहमसङ्गः परमेश्वरः ।
सदा मत्संनिधानेन चेष्टते सर्वमिन्द्रियम् ॥ १६ ॥
आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ।
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ॥ १७ ॥

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन्भावयितुं वाक्यमेतत्सदाऽभ्यसेत् ॥ १८ ॥
यदभ्यासेन तद्भावो भवेद् भ्रमरकीटवत् ।
अत्रापहाय संदेहमभ्यसेत्कृतनिश्चयः ॥ १९ ॥
ध्यानयोगेन मासैकाद् ब्रह्महत्यां व्यपोहति ।
संवत्सरं सदाभ्यासात्सिद्ध्यष्टकमवाप्नुयात् ॥ २० ॥
यावज्जीवं सदाऽभ्यासाज्जीवन्मुक्तो भवेद्यतिः ।
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥ २१ ॥
न मनोऽहं न बुद्धिश्च नैव चित्तमहंकृतिः ।
नाहं पृथ्वी न सलिलं न च वह्निस्तथानिलः ॥ २२ ॥
न चाकाशो न शब्दश्च न च स्पर्शस्तथा रसः ।
नाहं गन्धो न रूपं च न मायाहं न संसृतिः ॥ २३ ॥
सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ २४ ॥
मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमद्वयम् ।
सर्वज्ञोऽहमनन्तोऽहं सर्वेशः सर्वशक्तिमान् ॥ २५ ॥
आनन्दः सत्यबोधोऽहमिति ब्रह्मानुचिन्तनम् ।
अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमव्ययम् ॥ २६ ॥

अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ।
ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक् ॥ २७ ॥

नाहं देहो न मे देहः केवलोऽहं सनातनः ।
एकमेवाद्वितीयं वै ब्रह्मणो नेह किंचन ॥ २८ ॥

हृदयकमलमध्ये दीपवद्वेदसारं
प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।
हरिगुरुशिवयोगं सर्वभूतस्थमेकं
सकृदपि मनसा वै चिन्तयेद्यः स मुक्तः ॥ २९ ॥

शुभमस्तु

## नामावलिः

अष्टवर्षचतुर्वेदिने
द्वादशेऽखिलशास्त्रविदे
सर्वलोकख्यातशीलाय
प्रस्थानत्रयभाष्यकृते
पद्मपादादिसच्छिष्याय
पाषण्डध्वान्तभास्कराय
अद्वैतस्थापनाचार्याय
द्वैतद्विपकेसरिणे
व्यासनन्दितसिद्धान्ताय
वादनिर्जितमण्डनाय
षण्मतस्थापनाचार्याय
षड्गुणैश्वर्यमण्डिताय

नमः सर्वलोकानुग्रहकृते
,, सर्वज्ञत्वादिभूषणाय
,, श्रुतिस्मृतिपुराणज्ञाय
,, श्रुत्येकशरणप्रियाय
,, सकृत्स्मरणसन्तुष्टाय
,, शरणागतवत्सलाय
,, निर्व्याजकरुणामूर्तये
,, निरहंभावगोचराय
,, सशान्तभक्तहृत्तापाय
,, सर्वज्ञानफलप्रदाय
,, सदसद्वस्तुविमुखाय
,, सत्तासामान्यविग्रहाय

---

